मानन्तर्य्यं सम्भवति । तकारो मुखसुखार्थं इति । व्यावर्त्याभावात् । नहि झलात् प्लुताद्वा वर्णात् परः सिच् सम्भवति । पूर्वेणैव सिद्ध इति । लुप्तेऽपि सिचि प्रत्ययलक्षणेन झेः सिजनन्तरत्वादभूवन्निति नियमस्य व्यावर्त्यं दर्शयति । भुवो वुग् लुङ् लिटोरिति (६।४।८८) वुक् । ननु च नैवेह पूर्वसूत्रेण प्राप्नोति । नहीह सिजपेक्षयानन्तर्य्यं झेर्विद्यते । तत् किं प्रतिषिध्यत इत्याह प्रत्यय-लक्षणेनेत्यादि । लुप्ते हि प्रत्ययलक्षणेनानन्तर्य्यमस्ति । अतः पूर्वेण प्राप्नोति । जुस् नियमेन प्रतिषिध्यते । यदि तर्हि नियमार्थमिदमकार्षुरित्यत्रापि न स्यात् । न ह्यत्रातः सिज्लुगन्तात् परो झिर्भवतीत्यत आह तुल्यजातीये-त्यादि । आतः सिज्लुगन्तान्नियमार्थमयं जुस् विधीयते । स च नियम-स्तुल्यजातीयापेक्षः । तेन समानजातीयमेव व्यवच्छिनत्ति । कश्च समान जातीयोऽन्यः सिजलुगन्तः ? न चाकार्षुरित्यत्र झेः पूर्वः सिज्लुगन्त इति नायं नियमस्य विषयः । तेन भवत्येव जुस् ।

## १६१ । लङः शाकटायनस्यैव ।

अयुरयुरिति । पूर्ववच्छपो लुक् । पूर्ववच्च पररूपत्वम् । लङेवेत्यादि । यत्सम्बन्धिनो झेर्जुसभावो विधेयः । तिङ्त्वमधिकृत्येदमुक्तम् । कुत एतत् ? लुङ्लिङोरप्याकारान्तादनन्तरयोः सम्भवात् । तत्सम्बन्धिनोस्तु झेर्जुसित्येव-मादिनैव (३।४।१०८) शास्त्रेण जुसभावो विहित इति न तावदधिकृत्येदमुच्यते । एवकारस्तु लङ्व्यवच्छेदार्थः । स्वप्रत्ययेन झेर्व्यवधानात् । लङेव यो लङिति । येन केनचित् प्रकारेण यो लङ् न भवति स लङेव लङ् । स पुनर्मुख्यो लङ् यथा स्यात् । स चातिदेशद्वारेण यस्य लङ्वद्भावो न भवति स वेदितव्यः । यस्य ह्यतिदेशद्वारेण लङ्वद्भावो विहितः स उपचारेण लङित्युच्यते । परमार्थतस्तु लोड़ेवासौ । न लङेव । लङ्वद्भावेन यद्इति । लङिति सम्बध्यते । लङा तुल्यं वर्त्तत इति लङ्वत् । लङ्सदृश इत्यर्थः । तस्य भावो लङ्वद्भावः । येन लङ्वद्भावेन लङ् व्यपदिश्यते तस्य मा भूदिति मुख्यस्यैव लङो ग्रहणं यथा स्यादित्येवमर्थं लङ्ग्रहणं क्रियते । केन पुन लङ्वद्भावो भवतीत्याह लोटो लङ्वदिति । अनेन हि सूत्रेण (३।४।८५) लोटो लङ्वत्